१) स्वामी गजाननानन्द तीर्थ ॥

२) मुमुक्षु भवन काशी ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'मास्टर'मणिमालायाः १५४ मा॰ (स्तोत्रविभागे १३)

अथ

श्रीशङ्कराचार्यविरचिता मोहमुद्गरसहिता

# ब्रह्मचिन्तनिका

प्रारभ्यते

मूल्यम् -)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

* श्रीगणेशाय नमः *

श्रीशङ्कराचार्यविरचिता—

गजाननानन्द तीर्थ

# ❋ ब्रह्मचिन्तानिका ❋

स्वा० गजाननानन्द तीर्थ

अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इतिस्यान्निश्चितो मुक्तो बद्ध एवाऽन्यथा भवेत् ॥१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहमेव परं ब्रह्म न चाऽहं ब्रह्मणः पृथक् ।
इत्येवं समुपासीत ब्राह्मणो ब्रह्मणि स्थितः ॥२॥
अहमेव परं ब्रह्म निश्चितं चित्तचिन्त्यताम् ।
चिद्रूपत्वादसङ्गत्वादबाध्यत्वात्प्रयत्नतः ॥३॥
सर्वोपाधिविनिर्मुक्तं चैतन्यं च निरन्तरम् ।
तद्ब्रह्माऽहमिति ज्ञात्वा कथं वर्णाश्रमी भवेत् ॥४॥
अहं ब्रह्माऽस्मि यो वेद स सर्वं भवति त्विदम् ।
नाभूत्या ईशते देवास्तेषामात्मा भवेद्धि सः ॥५॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्योऽसावहमन्योऽस्मीत्युपास्ते योऽन्यदेवताम्।
न स वेद नरो ब्रह्म स देवानां यथा पशुः ॥६॥
अहमात्मा न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्।
सच्चिदानन्दरूपोऽहं नित्यमुक्तः स्वभाववान् ॥७॥
आत्मानं सततं ब्रह्म सम्भाव्य विहरन्ति ये ।
न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः॥८॥
आत्मानं सततं ब्रह्म सम्भाव्य विहरेत्सुखम् ।
क्षणं ब्रह्माऽहमस्मीति यः कुर्यादात्मचिन्तनम् ॥९॥
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्र०
२

तन्महापातकं हन्ति तमः सूर्योदयो यथा ।
अज्ञानाद्ब्रह्मणो जातमाकाशं बुद्बुदोपमम् ॥१०॥
आकाशाद्वायुरुत्पन्नो वायोस्तेजस्ततः पयः ।
अद्भ्यश्च पृथिवी जाता ततो व्रीहियवादिकम् ११
पृथिव्यप्सु पयो वह्नौ वह्निर्वायौ नभस्यसौ ।
नभोऽप्यव्याकृते तच्च शुद्धे शुद्धोऽस्म्यहं हरिः॥१२॥
अहं विष्णुरहं विष्णुरहं विष्णुरहं हरिः ।
कर्तृभोक्त्रादिकं सर्वं तदविद्योत्थमेव च ॥१३॥

चि,
२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ।
आनंदोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम्॥१४॥

नित्योऽहं निर्विकारोऽहं निर्विकल्पोऽहमव्ययः ।
सच्चिदानन्दरूपोऽहं पञ्चकोशातिगोऽस्म्यहम् १५

अकर्त्ताऽहमभोक्ताऽहमसङ्गः परमेश्वरः ।
सदा मत्सन्निधानेन चेष्टते सर्वमिन्द्रियम् ॥१६॥

आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन ।
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः॥१७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन्भावयितुं वाक्यमेतत्सदाऽभ्यसेत् ॥१८॥
यदभ्यासेन तद्भावो भवेद्भ्रमरकीटवत् ।
अत्रापहाय सन्देहमभ्यसेत्कृतनिश्चयः ॥१९॥
ध्यानयोगेन मासैकाद्ब्रह्महत्यां व्यपोहति ।
संवत्सरं सदाऽभ्यासात्सिद्ध्यष्टकमवाप्नुयात् २०॥
यावज्जीवं सदाऽभ्यासाज्जीवन्मुक्तो भवेद्यतिः ।
नाऽहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥२१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न मनोऽहं न बुद्धिश्च नैव चित्तमहङ्कृतिः ।
नाऽहं पृथ्वी न सलिलं न च वह्निस्तथाऽनिलः ॥
न चाऽऽकाशो न शब्दश्च न च स्पर्शस्तथा रसः ।
नाऽहं गन्धो न रूपं च न मायाऽहं न संसृतिः २३
सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ २४ ॥
मयि सर्वं लयं याति तद्ब्रह्माऽस्म्यहमद्वयम् ।
सर्वज्ञोऽहमनन्तोऽहं सर्वेशः सर्वशक्तिमान् ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आनन्दः सत्यबोधोऽहमिति ब्रह्माऽनुचिन्तनम् ।
अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माऽहमव्ययम्॥२६॥
अत्र प्रमाणं वेदान्तोऽनुभवो गुरवस्तथा ।
ब्रह्मैवाहं न संसारी न चाऽहं ब्रह्मणः पृथक् ॥२७॥
नाऽहं देहो न मे देहः केवलोऽहं सनातनः ।
एकमेवाद्वितीयं वै ब्रह्मणो नेह किञ्चन ॥२८॥
हृदयकमलमध्ये दीपयेद्वेदसारं
प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हरि-गुरु-शिवयोगं सर्वभूतस्थमेकं
सकृदपि मनसा वै चिन्तयेद्यः स मुक्तः ॥२६॥
इति श्रीमच्छङ्कराचार्यविरचिता ब्रह्मचिन्तनिका

❋ समाप्ता ❋

पुस्तकप्राप्तिस्थानम्—

**मास्टर खेलाड़ीलाल ऐण्ड सन्स,**
**संस्कृत बुकडिपो,**
**कचौड़ीगली, बनारस सिटी ।**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# * अथ मोहमुद्गरः *



भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढ़मते ! । प्राप्ते सन्निहिते मरणे न हि न हि रक्षति डुकृञ् करणे ॥१॥ मूढ ! जहीहि धना-गमनतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम् । यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित्तम् ॥२॥ नारीस्तनभरनाभीदेशं दृष्ट्वा मा गा मोहावेशम् । एतन्मांसवसादिविकारं मनसि विचिन्तय वारम्वारम् ॥३॥ नलिनी-दलगतजलमतितरलं तद्वज्जीवितमतिशय-चपलम् । विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम् ॥४॥ यावद्वित्तोपार्जन-सक्तस्तावन्निजपरिवारो रक्तः । पश्चाज्जीवति जर्जरदेहे वार्तां पृच्छति कोऽपि न गेहे ॥५॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावत्पवनो निवसति देहे तावत्पृच्छति कुशलं गेहे । गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये ॥६॥ बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीसक्तः । वृद्धस्तावच्चिन्तामग्नः परे ब्रह्मणि कोऽपि न सक्तः ॥७॥ का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः । कस्य त्वं कः कुत आयातस्तत्त्वं चिन्तय यदिदं भ्रातः ! ॥८॥ सत्सङ्गत्वे निःसङ्गत्वं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निःसङ्गत्वे निर्मोहत्वम् । निर्मोहत्वे निश्चलितत्वं निश्चलितत्वे जीवन्मुक्तिः ॥६॥ वयसि गते कः कामविकारः शुष्के नीरे कः कासारः । क्षीणे वित्ते कः परिवारो ज्ञाते तत्त्वे कः संसारः ॥१०॥ मा कुरु धन-जन-यौवनगर्वं हरति निमेषा-त्कालः सर्वम् । मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविश विदित्वा ॥११॥ दिन-यामिन्यौ सायं प्रातः शिशिर-वसन्तौ पुनरा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मो० यातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥१२॥ का ते कान्ताधनगत-चिन्ता वातुल ! किं तव नास्ति नियन्ता । त्रिजगति सज्जनसङ्गतिरेका भवति भवार्णव-तरणे नौका ॥१३॥ जटिली मुण्डी लुञ्चित-केशः काषायाऽम्बरबहुकृतवेषः । पश्यन्नपि च न पश्यति मूढो ह्युदरनिमित्तं बहुकृतवेषः ॥१४॥ अङ्गं गलितं पलितं मुण्डं दशनविहीनं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जातं तुण्डम् । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ॥१५॥ अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमर्पितजानुः । करतल-भिक्षा-तरुतलवासस्तदपि न मुञ्चत्याशापाशः ॥१६॥ कुरुते गङ्गासागरगमनं व्रतपरिपालन-मथवा दानम् । ज्ञानविहीनः सर्वमतेन मुक्तिं न भजति जन्मशतेन ॥१७॥ सुरमन्दिरतरु-मूलनिवासः शय्या भूतलमजिनं वासः । सर्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥१८॥ योगरतो वा भोगरतो वा सङ्गरतो वा सङ्गविहीनः । यस्य ब्रह्मणि रमते चित्तं नन्दति नन्दति नन्दत्येव ॥१९॥ भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता । सकृदपि येन मुरारिसमर्चा क्रियते तस्य यमेन न चर्चा ॥२०॥ पुनरपि जननं पुनरपि मरणं पुनरपि जननी जठरे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शयनम् । इह संसारे बहुदुस्तारे कृपयाऽपारे पाहि मुरारे ! ॥२१॥ रथ्याकर्पटविरचितकन्थः पुण्याऽपुण्यविवर्जितपन्थः । योगी योगनियोजितचित्तो रमते बालोन्मत्तवदेव ॥२२॥ कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः । इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् ॥२३॥ त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि मय्यसहिष्णुः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वस्मिन्नपि पश्यात्मानं सर्वत्रोत्सृज भेदा-
ज्ञानम् ॥२४॥ शत्रौ मित्रे पुत्रे बन्धौ मा
कुरु यत्नं विग्रहसन्धौ । भव समचित्तः सर्वत्र
त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥२५॥
कामं क्रोधं लोभं मोहं त्यक्त्वाऽऽत्मानं भावय
कोऽहम् । आत्मज्ञानविहीना मूढास्ते पच्यन्ते
नरकनिगूढाः ॥२६॥ गेयं गीतानामसहस्रं
ध्येयं श्रीपतिरूपमजस्रम् । नेयं सज्जनसङ्गे



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चित्तं देयं दीनजनाय च वित्तम् ॥२७॥
सुखतः क्रियते रामाभोगः पश्चाद्धन्त शरीरे रोगः। यद्यपि लोके मरणं शरणं तदपि न मुञ्चति पापाचरणम् ॥२८॥ अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् । पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता रीतिः॥२६॥
प्राणायामं प्रत्याहारं नित्याऽनित्यविवेकवि-चारम् । जाप्यसमेतसमाधिविधानं कुर्ववधानं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मो १० | महदवधानम् ॥३०॥ गुरुचरणाम्बुजनिर्भर-
भक्तः संसारादचिराद्भव मुक्तः । सेन्द्रियमानस-
नियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥३१॥
इति श्रीमच्छङ्कराचार्यविरचितो मोहमुद्गरः समाप्तः | मु० १०

प्रकाशकः—

मास्टर खेलाड़ीलाल ऐण्ड सन्स,

संस्कृत बुकडिपो,

कचौड़ीगली, बनारस सिटी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति

श्रीशङ्कराचार्यविरचिता मोहमुद्गरसहिता

ब्रह्मचिन्तनिका

समाप्ता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri